# सिद्धेश्वरीतन्त्रोक्तं
# श्रीजानकीदेव्याः सहस्रनामस्तोत्रम्

श्रीलक्ष्मण उवाच

देवदेव जगन्नाथ ! कथयस्व महाप्रभो ।
नाम्नां सहस्रं जानक्याः श्रोतुमिच्छामि तत्त्वतः ॥

श्रीराम उवाच

कथयामि भवत्प्रीत्या शृणु लक्ष्मण ! भक्तितः ।
यत् पठित्वाथ श्रुत्वा वा सर्वान् कामानवाप्नुयात् ॥

अस्य श्रीजानकीदेव्याः सहस्रनामस्तोत्रस्य वसिष्ठ ऋषिः, वागीश्वरी देवता, अनुष्टुप् छन्दः, सर्वकामार्थसिद्धये जपे विनियोगः ।

ॐ जानकी कमला विद्या सिद्धविद्या क्षमात्मजा ।
निर्मला भावनी भव्या सर्वमंगलरूपिणी ॥ 1 ॥
कौलिनी[१०] कुलजा कान्ता अपर्णा भक्तवत्सला ।
सुकेशी चारुनेत्रा च देवदानवसेविता ॥ 2 ॥
अतिगुप्ता सरोजाक्षी सकला[२०] सर्वरूपिणी ।
भक्तिवश्या महोग्रा च सर्वतन्त्रविशारदा ॥ 3 ॥
धरात्मजा महामाया शब्दरूपा महोत्सवा ।
कामा च रमणी[३०]भद्रा यज्ञोत्सवविभूषिता ॥ 4 ॥
चन्द्रवक्त्रा चकोराक्षी चारुनेत्रा सुलोचना ।
रघुनाथप्रिया देवी शारदा कुलभूषिता[४०] ॥ 5 ॥
कुलनाथा च दिव्या च श्रीमती विश्वरूपिणी ।
रामप्रिया राममता रामगोप्या च मुक्तिदा ॥ 6 ॥

चतुर्वर्गप्रदा सौख्या[५०] सर्वपापविनाशिनी ।
वाराही वारुणी विद्या महाविद्या महेश्वरी ॥ 7 ॥
सती सत्यवती धूम्रा धवला[६०] धर्मरूपिणी ।
धर्मनिष्ठा धर्ममयी धर्मी धर्मनिषेविता ॥ 8 ॥
बालिका युवती वृद्धा नित्या नित्यमयी[७०] तथा ।
गायत्री वेदमाता च सर्वसंकटतारिणी ॥ 9 ॥
हिरण्या कनका रक्ता भद्रा नीलसरस्वती ।
इन्द्रा चेन्दुस्वरूपा[८०] च दिव्याम्बरविभूषणा ॥ 10 ॥
जगन्माता जगद्धात्री जननी सर्वरूपिणी ।
पत्नी चामरकेशी च कुन्ददन्ता सुनासिका ॥ 11 ॥
कुन्दोत्सवा[९०] कुन्दप्रिया कुन्दपुष्पमयी तथा ।
आग्नेयी वायवी ज्येष्ठा वारुणी वरुणप्रिया ॥ 12 ॥
सर्वदिग्वर्णिता विश्वा सर्वेषामुपकारिणी[१००] ॥
बुद्धिर्मेधा प्रिया शक्तिस्तुष्टिः पुष्टिर्धृति क्षमा ॥ 13 ॥
अबला निश्चला[११०] लक्ष्मीः श्रद्धा पन्नगशायिनी ।
अनन्ता महती चिन्ता ह्यचिन्त्या चिन्मयी स्मृता ॥ 14 ॥
रजोमयी ब्रह्मरूपा[१२०] विष्णुमाया महेश्वरी ।
सर्वतीर्थमयी देवी दैत्यदानवनाशिनी ॥ 15 ॥
विरूपा विश्वरूपा च मृडानी मृडवल्लभा ।
कोटिचन्द्रप्रतीकाशा[१३०] कोटिसूर्य्यसमप्रभा ॥ 16 ॥
नदमध्या नदभवा नदोद्भूता नदाक्षिका ।
मन्त्ररूपा मन्त्रभवा यन्त्रमन्त्रमयी तथा ॥ 17 ॥
द्विपदा त्रिपदा[१४०] गोत्रा चतुर्वणा च त्र्यक्षरी ।
वरेषु गोंपिता गुप्ता अरण्यस्थिरनायिका ॥ 18 ॥

स्थिरा च तीर्थरूपा च वेगिनी[१५०] वेगरूपिणी ।
वेगात्मिका वेगधरा काश्यपी कमलेक्षणा ॥ 19 ॥
शक्तिरूपा शक्तिधरा शक्ताशक्तविभेदकि ।
गुणागुणमयी गम्या[१६०] निर्गुणा सद्गुणान्विता ॥ 20 ॥
गन्धर्वसेविता नन्दी पूर्णब्रह्मस्वरूपिणी ।
कात्यायनी जगद्धात्री स्थितिसंहारकारिणी ॥ 21 ॥
रामजाया च मातङ्गी[१७०] सुतुङ्गा कदलीप्रिया ।
प्रीतिमनाः प्रीतिदात्री षड्वर्णशीर्षभंजिका ॥ 22 ॥
वेणुकान्ता वेणुभवा वीणावाद्या च शोभना ।
खण्डचन्द्रा[१८०] पूर्णचन्द्रा सकला निष्कला तथा ॥ 23 ॥
तेजस्का मुखरा सौम्या निःशब्दा शब्दरूपिणी ।
सिन्दूरारुणरक्ता च सिन्दूरारुणभूषिता ॥ 24 ॥
मेघस्वना च मेघा च बाहुदण्डविशोभिता[१९०] ।
जयध्वनि र्निघोरा च खर्खरा खगरूपिणी ॥ 25 ॥
खगाख्या खगमान्या च तडिद्रूपा[२००] तडित्प्रभा ।
वज्ररूपा वज्रमयी वज्रतन्त्रा च विद्रुमा ॥ 26 ॥
कादम्बिनी रता रत्या चंचला विमला[२१०] ध्रुवा ।
अस्त्ररूपा शस्त्ररूपा ह्यणिमा ध्रुवमण्डला ॥ 27 ॥
तर्कविद्या वेदविद्या ज्योतिर्विद्या विशारदा ।
काली[२२०] कल्पकला साध्या पाण्डुरूपा पराक्रमा ॥ 28 ॥
नागकन्या नागमाता नागपत्नी फणात्मिका ।
शची सत्यकला[२३०] निद्रा सुनिद्रा च सुचेतना ॥ 29 ॥
सुशीला खर्वरूपा च खर्वजंघा करात्मिका ।
दीर्घजंघा दीर्घरवा दीर्घनासा[२४०] सुकर्णिका ॥ 30 ॥

कर्णेनपूजिताऽछिन्ना छिन्ना छिन्नमयी तथा ।
आपदा पादपापादा ज्ञानाज्ञानपरायणा । 31 ॥
गौरी२५० पद्मा च कल्याणी उर्वशी ध्वजरूपिणी ।
पताकी केतकी चूर्णा दृढ़व्रतपरायणा ॥ 32 ॥
तिलोत्तमा रोहिणी२६० च बदरी कविमामिनी ।
मघा च भरणी पूर्वा पराऽपूर्वा च पूर्विका ॥ 33 ॥
अपर्विका अपूर्वा२७० च अपूर्वफलभूषिता ।
शंखिनी शंखहस्ता च चित्रहस्ता सुकोमला ॥ 34 ॥
कोमला पत्ररूपा च गान्धारी चपला कला२८० ।
रुक्मिणी रुक्मरूपा च क्षुधा तृष्णा जरातुरा ॥ 35 ॥
अचिन्त्या चिन्तिता चिन्ता मनोज्ञा मनसिस्थिता२९० ।
अञ्जना त्वाजना व्यञ्जा व्यञ्जनीया जरार्पिता ॥ 36 ॥
अजरा निर्जरा जीर्णा जीर्णार्पितविभाविनी ।
कूर्मरूपा३०० सूकरी च हरिणी मृगरूपिणी ॥ 37 ॥
कस्तूरी मृगनाभिः च कर्पूरागरुकुंकुमा ।
रघुदेवरता शक्ता रघुदेवरतिप्रिया ॥ 38 ॥
पौरन्दरी३१० तथा विष्णोर्जाया माहेश्वरी वरा ।
सर्वेषांजननी नित्या चार्वङ्गी जनकात्मजा ॥ 39 ॥
महाधीरा महामाया महामोहा३२० महोत्सवा ।
वैकुण्ठनाथपत्नी च विमलारुणरूपिणी ॥ 40 ॥
भागीरथी मनोबुद्धिर्नित्यानन्दमयी सहा ।
महाव्याधिहरा३३० भीमा सर्वरोगापहारिणी ॥ 41 ॥
शंखिनी चक्रिणी धात्री हस्तेपुस्तकधारिणी ।
सम्पदा च सदाचारा द्रौपदी द्रुपदात्मिका३४० ॥ 42 ॥

सतांसृष्टिकरी सौम्या दैत्यानांक्षयकारिणी ।
दरैत्यप्राणहरा धात्री दयामोदरसप्रिया ॥ 43 ॥
क्षान्तिः क्षेमङ्करी बुद्धिर्भारती भयनाशिनी[३५०] ।
तरणिस्तरुणी तीक्ष्णा तीक्ष्णदैत्यविनाशिनी ॥ 44 ॥
दात्री दानपरा दान्ता दुष्टदैत्यविनाशिनी ।
क्रिया क्रियावती[३६०] हृष्टा तुष्टा पुष्टा तथोर्वशी ।
वेदमना वेदकन्या वेदमान्या पुलोमजा ॥ 45 ॥
सुखिनी सुखदात्री[३७०] च सर्वसौख्यविवर्धिनी ।
शीला शीलवती सूक्ष्मा सूक्ष्मासूक्ष्मवरप्रदा ॥ 46 ॥
वरेण्या वरदा वाणी ज्ञानिनी ज्ञानदात्मजा[३८०] ।
भृगुवंशसमुद्भूता भार्गवी भृगुवल्लभा ॥ 47 ॥
रक्ताम्बरधरा रामा रमणी सुरनायिका ।
मोक्षदा शिवदा श्यामा[३९०] योगध्यानपरायणा । 48 ॥
योगेश्वरी योगरूपा योगनिद्रा कृशोदरी ।
अम्बा जाम्बवती चैव सत्यभामा मनोरथा ॥ 49 ॥
रौद्रा[४००] रौद्रस्वना रौद्री रौद्रदैत्यविनाशिनी ।
कुमारी कौशिकी काली कामदैत्यविनाशिनी ॥ 50 ॥
रामपत्नी रामरता रामजाया[४१०] महोदरी ।
विष्णुपत्नी विष्णुभवा विष्णुजाया च शूलिनी ॥ 51 ॥
मदनान्तक कान्ता च मदनान्तकवल्लभा ।
भूतभव्यभवस्पृष्टा पावनी परिपालिनी[४२०] ॥ 52 ॥
अदृश्या व्यक्तरूपा च दृश्या श्रेष्ठा प्रवर्द्धिनी ।
अपांनिधिसमुद्भूता धारिणी च प्रतिष्ठिता ॥ 53 ॥
अच्युता चाच्युतप्राणा[४३०] प्राणदा वासवेश्वरी ।
उत्तरा क्षोभणा क्षेमा श्रीगर्भा परमेश्वरी ॥ 54 ॥

वरदा पुष्टिदेहा च कामिनी[४४०] कञ्जलोचना ।
शरण्या वरदा प्रीता प्रीत्यानानन्दस्वरूपिणी ॥ 55 ॥
पताकिनी दयारम्भा सुरम्या च सुरेश्वरी ।
श्रीमती[४५०] च शिवा नन्दा त्रिशक्तिर्मोक्षदायिनी ॥ 56 ॥
परापरकला कान्ता शिशिराचलकन्यका ।
दक्षा भगवती धेनुः[४६०] कामधेनुः कलावती ॥ 57 ॥
सुरमान्या सुरश्रेष्ठा श्रेष्ठा प्राणेश्वरी स्थिरा ।
वज्रायुधा व्रजहस्ता चण्डी[४७०] चण्डपराक्रमा ॥ 58 ॥
तमोघ्नी ध्वान्तसंहन्त्री प्रयतात्मा पतिव्रता ।
गौरी सुवर्णवर्णा च स्थितिसंहारकारिणी ॥ 59 ॥
मेधाविनी महावीर्या[४८०] हंसी संसारतारिणी ।
एकानेका महेज्या च सर्वलोकप्रकाशिनी ॥ 60 ॥
षट्चक्रभेदिनी वामा कार्यस्था कार्यरञ्जिता[४९०] ।
प्रणता प्राणिनामार्तिहारिणी दैत्यनाशिनी ॥ 61 ॥
अजा च बहुवर्णा च पुरुषार्थप्रवर्तिनी ।
गणिता गुणसंपन्ना नगजा खगवाहिनी[५००] ॥ 62 ॥
रक्ता नीला सिता श्यामा कृष्णा बभ्रुश्च कर्बुरा ।
क्षुधा तृष्णा जरा[५१०] वृद्धा तरुणी करुणालया ॥ 63 ॥
चन्द्रानना महोष्ठी च चारुमूर्द्धजशोभिता ।
कला काष्ठा मुहूर्ता च निमेषा[५२०] कालरूपिणी ॥ 64 ॥
मानिनी माधवी मान्या माननीया महागुणा ।
सुवर्णवसना नाशा चक्षुस्पर्शवती रसा[५३०] ॥ 65 ॥
गन्धप्रिया सुगन्धा च मनोज्ञा च मनोगता ।
हस्ता ज्येष्ठा मघा पुष्या धनिष्ठा पूर्वफल्गुनी[५४०] ॥ 66 ॥

मृगनाभि र्मृगाक्षी च कर्पूरामोदधारिणी ।
मधुश्रीर्माधवी वल्ली मधुमत्ता मदोद्धता ॥ 67 ॥
रेवती रमणी[५५०] चित्रा चित्रहारविभूषणा ।
रक्ताम्बरधरा क्षीणा रक्तपुष्पावतंसिनी ॥ 68 ॥
नवपुष्पात्मिका पुष्पा पुष्पस्रक्सुविभूषणा ।
शुक्लाम्बरधरा धीरा[५६०] महाश्वेता वसुप्रिया ॥ 69 ॥
नवपुष्पगृहोपेता नवपुष्पोपशोभिता ।
चन्द्रिका चन्द्रकान्तिश्च सूर्यकान्तिर्निशाचरी ॥ 70 ॥
विजया च जयन्ती[५७०] च मोहिनी शत्रुनाशिनी ।
लज्जा सरस्वती नन्दा दानवेन्द्रप्रमर्दिनी ॥ 71 ॥
चद्रमण्डलसंकाशा ज्ञानानन्दप्रवर्द्धिनी ।
रूपयौवनसंपन्ना गुणशीलसमन्विता[५८०] ॥ 72 ॥
सर्वैश्वर्यसमायुक्ता सर्वलावण्यशोभिता ।
शीता शीतप्रिया स्वर्गा सकला वनदेवता ।
गुरुरूपधरा गुर्वी कालमृत्युविनाशिनी[५९०] ॥ 73 ॥
अणिमादिगुणोपेता महामारी च शान्तिदा ।
चतुःसमुद्रशयना चतुर्वर्गफलप्रदा ॥ 74 ॥
सर्वकालोद्भवा प्रीता सर्वकालोद्भवोद्भवा ।
अनादिनिधना पुष्टि[६००]र्वृक्षमध्यनिवासिनी ॥ 75 ॥
सर्वचक्रेश्वरी सर्वा सर्वमन्त्रमयी सदा ।
सहस्रनयना प्राणा सहस्रनयनप्रिया ॥ 76 ॥
सहस्रशीर्षा सुमना[६१०] मन्दभा सर्वभञ्जिका ।
गीतनृत्यप्रिया कामा सन्तुष्टिर्धनदा प्रदा ॥ 77 ॥
मायाधरी मणिरता मणिसम्मानतत्परा[६२०] ।
माधवा नन्ददा मध्वी यशोदानन्दवर्द्धिनी ॥ 78 ॥

यज्ञप्रीता यज्ञमयी यज्ञकर्मविभूषणा ।
राजा राजकुलेज्या[६३०] च राजराजेश्वरी रमा ॥ 79 ॥
रमिणी रामिणी राका रामानन्दप्रदायिनी ।
रजनीकरपूर्णास्या रक्तोत्पलविलोचना ॥ 80 ॥
लाङ्गली प्रेमसन्तुष्टा[६४०] लाङ्गलीप्रणयप्रिया ।
लाक्षारुणा च ललना लीला लीलावती लया ॥ 81 ॥
लङ्केश्वरगुणप्रीता लङ्केशवरदायिनी ॥ 82 ॥
लवङ्गकुसुमप्रीता लवङ्गकुसुमप्रभा[६५०] ।
पुण्यदा पूर्णिमा पुण्या पुण्यकोटिफलप्रदा ॥ 83 ॥
पुराणगोचरा पूर्णाऽपूर्वा प्रौढ़विनाशिनी ।
प्रह्लादहृदयाह्लादगेहिनी[६६०] पुण्यचारिणी ॥ 84 ॥
फलदात्री फलासक्ता फलदातृविभूषिता ।
वाणी विलासकरिणी वराङ्गी च वराननाा ॥ 85 ॥
विष्णोर्वक्षस्थलस्था च वाग्मती[६७०] विन्ध्यगेहिनी ।
धीरा धैर्यवती धृष्टा धवलाम्भोजसन्निभा ॥ 86 ॥
तन्त्रधारी तन्त्रतारी तन्त्रकारी भवातुरा ।
तपस्या[६८०] तालिनी तीर्णा दूर्वादलसुसेविता ॥ 87 ॥
कर्पूरपूरवदना कलानाथसमप्रभा ।
कलाकेलिप्रियाकीर्णा कुञ्जरेश्वरगामिनी ॥ 88 ॥
खर्वा च खञ्जनद्वन्द्वलोचना[६९०] रवभूषिता ।
खद्योत इव दुर्लक्ष्या खद्योत इव चञ्चला ॥ 89 ॥
चलच्चकोरनयना चलत्खञ्जनलोचना ।
चतुर्वेदमयी रूपा चतुर्वर्णमयी भृता ॥ 90 ॥
जगन्नाथप्रिया[७००] जीवा जगन्नाथरता जया ।
जामातृवरदा जम्भा यमलार्जुनधारिणी ॥ 91 ॥

तपस्या तालिनी तीर्णा पूर्णानन्दमयी[७१०] सदा ।
तारस्वरेणसहिता तारस्वरविभूषिता ॥ 92 ॥
वंशध्वजा वंशरूपा नन्दिनी कुलमध्यगा ।
फट्कारप्रणया वृद्धा चित्रा[७२०] पातकनाशिनी ॥ 93 ॥
अधःस्थिता च पाताला अधोभुवनगामिनी ।
अतला वितला तीर्णा सुतला नागशायिनी ॥ 94 ॥
द्विजिह्वा[७३०] बहुजिह्वा च रसना सुरसेविता ।
शून्या रण्या वरेण्या च वरिष्ठा च युगाम्बरा ॥ 95 ॥
प्रतिपर्वस्थिता देवी[७४०] तिथिः स्वरविभूषिता ।
प्रतिमा नवमी चैव युगाढ्या चक्ररूपिणी ॥ 96 ॥
वाहग्रस्ता वाहभरा वाहसूर्यसमन्विता ।
चन्द्रज्योत्स्नामरा[७५०] काम्या राकामृतचरा चरी ॥ 97 ॥
नागरी नागरा ज्येष्ठा नागराजसुता नगा ।
नवीनेन्दुकला[७६०] नन्दी नन्दिकेश्वरपूजिता ॥ 98 ॥
नीरजाक्षी चञ्चलाक्षी नीरजद्वन्द्वलोचना ।
नीरप्रसूर्नीरभवा नीरनिर्मलदेहिनी ॥ 99 ॥
नवीनकेतकीकुन्द-माकन्दस्रग्विभूषिता ।
नायिकानन्दनिलया[७७०] नायकानन्दकारिणी ॥ 100 ॥
नर्मकर्मरता नित्या नर्मधर्मपरायणा ।
नर्मप्रीता नर्मरता नर्मध्यानपरायणा । 101 ॥
नर्मकर्मैकसहिता नर्मकर्मैकपालिका ।
नवनारीगुणप्रीता[७८०] नवनारीवरप्रदा ॥ 102 ॥
नारायणप्रिया कान्ता निष्फला परमा कला ।
नारायणप्रिया देवी नारायणसमन्विता ॥ 103 ॥

नारायणी[७९०] समा युक्ता सत्यभामा दृढ़व्रता ।
चतुःसागरमध्यस्था चतुःसागररूपिणी ॥ 104 ॥
वासुदेवरता विश्वा विज्ञा विज्ञानकारिणी[८००] ।
वीणावती वलाकीर्णा बालपा पुष्परोहिता ॥ 105 ॥
बलवी सुमति वैंद्या विद्याहारविभूषिता ।
विद्यावती वैद्यपदा[८१०] सीता वैवस्वता वलिः ॥ 106 ॥
भीतिहा भयदा भीतिरंशुजालसमप्रभा ।
शर्वाणी सुमना सर्वा[८२०] सुभद्रा भद्रिका तथा ॥ 107 ॥
विनता शङ्करी शान्ता मानवी मानरूपिणी ।
मनुध्याना मनुज्ञाना मानसी[८३०] मनुचित्तगा ॥ 108 ॥
सदागोप्या जपरता जपस्तुत्यादिभूषिता ।
मरीची मारिची चैव हैमा हैमवती शिला ॥ 109 ॥
सुगन्धा[८४०] गन्धसहिता आयुष्यक्षयरूपिणी ।
क्षीरसाक्षी क्षीरस्रवा क्षीरिका श्रीर्हरिप्रिया ॥ 110 ॥
बीजमयी बीजरूपा बीजोद्भवा[८५०] च बीजिका ।
द्वारा द्वारवती ध्वान्ता प्रचण्डा द्वारमालिनी ॥ 111 ॥
कल्याणी कमला कारा कमली[८६०] कालरूपिणी ।
कामाक्षी कामदा काम्या कामना कामचारिणी ॥ 112 ॥
कालरात्रिर्महाकाली कौलिनी कल्परूपिणी[८७०] ।
कुमारी करुणा कीर्त्तिः कलिकल्मषनाशिनी ॥ 113 ॥
कात्यायनी कलाधारी कौमुदी कमलप्रिया ।
माहेश्वरी महामाया[८८०] महातेजा महेश्वरी ॥ 114 ॥
महाज्योतिर्महामूर्तिर्महासुरविनाशिनी ॥ 115 ॥
महामाया महावीर्या महापातकनाशिनी ।
महामखा मन्त्रमयी[८९०] मणिपूरकवासिनी ॥ 116 ॥

मानसी मानदा मान्या मनश्चक्षुरगोचरा ।
गण्या मता च गायत्री गन्धर्वगणसेविता[१००] ॥ 117 ॥
सिद्धा यज्ञप्रिया शक्तिर्यज्ञाङ्गी यज्ञवर्त्मिका ।
यज्ञरूपा यज्ञभवा यज्ञी यज्ञकृतालया ॥ 118 ॥
जालन्धरी जगन्माता[११०] जातवेदा जगत्पिता ।
जितेन्द्रिया जितक्रोधा जननी जयदायिनी ॥ 119 ॥
गङ्गा गोदावरी रेवा गौतमी[१२०] च शतद्रुका ।
सिन्धुर्मन्दाकिनी सिद्धा यमुना च सरस्वती ॥ 120 ॥
चन्द्रभागा विपाशा च गण्डकी विन्ध्यवासिनी[१३०] ।
नर्मदा कद्रु कावेरी अहल्या चम्पकावती ॥ 121 ॥
अयोध्या मथुरा माया काशी कांची[१४०] ह्यवन्तिका ।
द्वारावती च तीर्थेशा महाकिल्बिषनाशिनी ॥ 122 ॥
वैष्णवी विष्णुरूपा च विष्णुमाया स्वरूपिणी ।
शिवेश्वरी शिवा[१५०] राधा भवानी भवमोचनी ॥ 123 ॥
हल्लोत्खातसमुद्भूता रत्नभूता धनेश्वरी ।
हृद्या विद्याप्रदात्री च कुशमाता परेश्वरी[१६०] ॥ 124 ॥
लवमाता सौम्यमूर्त्तिः शर्वा सर्वानुशासनी ।
कमला विष्णुवन्द्या च मान्या सुनयनात्मजा ॥ 125 ॥
रामेशी रामरमणी[१७०] रामरामा रमेश्वरी ।
वैदेही मैथिली सिद्धा मिथिलाभूमिजा तथा ॥ 126 ॥
सुफला चर्चिता वन्द्या दशाननविनाशिनी[१८०] ।
दण्डा दण्डप्रिया चैव दण्डकारण्यवासिनी ॥ 127 ॥
लक्ष्मणाराधिता शान्ता कान्ता भरतवन्दिता ।
शत्रुघ्नपूजिता कान्तिः हनुमद्वन्दिता[१९०] वरा ॥ 128 ॥

महोग्रा च महासेना माहेशी मैथिलात्मजा ।
साकेतेशा जनाराध्या धनेशी धनदा शुभा[१०००] ॥ 129 ॥

॥ समाप्तौ फलश्रुतिः ॥

पुण्यं सहस्रनामेदं जानक्या भुवि दुर्लभम् ।
यः पठेत् प्रातरुत्थाय शुचिर्भूत्वा समाहितः ॥ 130 ॥
यश्चापि शृणुयान्नित्यं नरो निश्चलमानसः ।
एककालं द्विकालं च त्रिकालं श्रद्धयान्वितः ॥ 131 ॥
सर्वपापविनिर्मुक्तो धनधान्यसुतान्वितः ।
तेजस्वी बलवान् शूरः शोकरोगविवर्जितः ॥ 132 ॥
यशस्वी कीर्तिमान् धन्यः सुभगो लोकपूजितः ।
रूपवान् गुणसम्पन्नः प्रभावीर्यसमन्वितः ॥ 133 ॥
श्रेयांसि लभ्ते नित्यं निश्चलां च शुभां श्रियम् ।
सर्वदुःखविनिर्मुक्तो लोभक्रोधविवर्जितः ॥ 134 ॥
विद्यानां पारगो विप्रः, क्षत्रियो विजयी भवेत् ।
वैश्यस्तु धनलाभाढ्यः शूद्रस्तत्सुखमश्नुते ॥ 135 ॥
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ।
इष्टकामांस्तु कामार्थी धर्मार्थी धर्ममक्षयम् ॥ 136 ॥

॥ इति श्रीसिद्धेश्वरीतन्त्रे जानकीसहस्रनामस्तोत्रं सम्पूर्णम् ॥